उत्तरोत्तररूढ्यर्थं शिशोः करणमानसम् ॥(?) ३२२ ॥
फलसंपत्तये वापि भावांशवशशालिनः ।
अनुग्रहं स वै कुर्यात्पूर्णत्वादूर्ध्ववृत्तितः ॥ ३२३ ॥
नन्वद्वये किमूर्ध्वं स्यान्न किंचिद्भेदमोहिताः ।
भवन्तस्त्वधरावस्था भेद एवाधरो यतः ॥ ३२४ ॥
तस्माद्ये केचनान्ये स्युः पशुशासनवर्तिनः ।
वैष्णवाः सौगताः श्रौतास्तथा श्रुत्यन्तवादिनः ॥ ३२५ ॥
इत्यादयो नाधिकृता जातुचित्पतिशासने ।
उक्तवान्यत्र शास्त्रेष्वप्यधिकारिविवेचने ॥ ३२६ ॥
यो वैष्णवो मन्त्रं दद्याच्छैवं मूढमतिः शिशोः ।
तं पापं वञ्चकं मत्वा शिशुर्न्याय्यं समाचरेत् ॥ ३२७ ॥
इहाप्युक्तं मोचदः स्यात्स्वभ्यस्तज्ञानवानिति ।
अभ्यस्तं च परं ज्ञानं यतो नास्त्येव विच्युतिः ॥ ३२८ ॥
परमाद्वयविज्ञानान्न खल्वप्यस्ति विच्युतिः ।
स्वात्मपक्षस्थिताशेषज्ञाननिर्भरवृत्तिकः ॥ ३२९ ॥
कथं को वा कुतो वापि च्यवतां तिष्ठतु क्व वा ।
इत्थं य एष शास्त्रार्थः स्थितः शक्तिप्रभावतः ॥ ३३० ॥
अन्तःकृताशेषतत्त्ववर्णादिभरनिर्भरः ।
सर्वाभिधो भैरवात्मा सोऽयमेव स्वरूपभाक् ॥ ३३१ ॥
शास्त्रेऽस्मिन्परमेशेन ज्ञानचन्द्राख्यया कृतः ॥

तद्व्याख्यातमिदं प्रसङ्गगहनं वाक्यं मया स्वागम-
प्रामाण्यप्रतिपादनक्रमवशात्तत्तत्प्रसङ्गादपि ।
अत्रारूढधियां प्रमाणमहिमा विश्वाद्वयोद्दामितो
भातीति स्वयमेव सत्यहृदया ज्ञास्यन्ति किं श्लाघितैः ॥

ये सम्यक्प्रविचारिणो ननु शिवाः कस्तान्प्रति प्रोद्यमः
किं तैर्ये प्रविमर्शदूरशिखरारोहक्रमे पङ्गवः ।
पाषाणायितवृत्तयः पुनरमी ये शास्त्रवन्ध्या नराः
संरम्भः प्रलयाम्बुधेरिव ततः स्वात्मन्ययं घूर्णते ॥
संशाम्य स्वयमात्मनि त्यज जवाज्ज्वालाजटाडम्बरान्
भोः कल्पानल दाह्यमस्ति भवतो नाद्यापि किञ्चिद्यतः ।
त्वत्प्रोल्लासविघूर्णनाघनघुरद्घोरस्फुलिङ्गाशतै-
र्विश्वं व्याप्य विलीनतां गतमिदं द्राक्त्वत्प्रकाशात्मकम् ॥
प्रवरपुरनामधेये पुरे पूर्वे काश्मीरिकोऽभिनवगुप्तः ।
मालिन्यादिमवाक्ये वार्तिकमेतद्रचयति स्म ॥ ३३५ ॥

इति श्रीमन्महामाहेश्वराचार्यवर्याभिनवगुप्तपादविरचिते
श्रीमालिनीविजयोत्तरश्लोकवार्तिके
द्वितीयः काण्डः ॥
शुभाय बोभवीतु ॥

श्रीमत्प्रतापभूभर्तुराज्ञया प्रीतये सताम् ।
मधुसूदनकौलेन संपाद्येदं प्रकाशितम् ॥

अयं ग्रन्थः

'पंडित विश्वनाथ एंड सन्स

फोटाग्राफर्स प्रोप्राइटर्स इत्यादि'

इत्येतैः स्वकीये

'कश्मीर प्रताप स्टीम प्रेस श्रीनगर'

इत्याख्ययाख्याते

मुद्रणायन्त्रे सम्मुद्रितः

